॥ श्रीगजाननाय नमः ॥

# चक्षुषः प्राप्यकारित्वम्

गुरुपादारविन्दालिवन्दनानन्दमानसः ॥
आशुतोषो विवृणुते चक्षुषः प्राप्यकारिताम् ॥ १ ॥

चक्षुषा रूपादीनां प्रत्यक्षं भवतीत्यत्र सर्वदार्शनिकानामेकमत्यम् । तत्र सामग्र्याः करणत्वं, संयोगादेर्ज्ञातृव्यापारस्य, वृत्तेरुपयोगस्य वेत्यन्यदेतत् । कारणत्वे तु चक्षुषो न कस्यापि विप्रतिपत्तिः । तत्राहङ्कारिकं चक्षु, स्तद्द्वारेण विषयाकारबुद्धिपरिणामो ज्ञानम् इति साङ्ख्ययोगाऽऽचार्याः ॥

तैजसं चक्षु र्बहिर्निर्गत्य विषयसन्निकृष्टं सद् विषयं बाह्यालोकसहकारेण प्रत्यक्षीकरोतीति न्यायवेदान्तादिविदः, अतएव स्वच्छे दर्पणादौ प्रतिहतं चक्षुस्ततः परावृत्य स्वच्छद्रव्यप्रतिहतदिवाकरकरनिकर इव सम्मुखानवस्थितमपि मुखादिकं प्रकाशयति, दोषाच्च दर्पणाऽसन्निहितमपि मुखादिकं दर्पणस्थमिवाऽऽभाति, एवं स्वावरकस्वच्छद्रव्यसंलग्नेन पीतपित्तेन निःसरच्चक्षुः पीतकाचादिविनिर्गताऽऽलोकप्रकाशितशुक्लादिद्रव्यमिव सकलं द्रव्यजातं पीततया प्रकाशयति. अथवा स्वाश्रयस्थपीतिमानमेव प्रकाशयति विषयशुक्लिमानं न प्रकाशयति, अथवा स्वाश्रयस्थपीतद्रव्यसाम्मिश्रणेन विषयस्य यादृशं रूपं भवेत्तादृशमेव रूपं प्रकाशयति, तेजोविनिर्गमाभावे चैतदनुपपत्ति रित्यपि त एव वदन्ति तत्रापि सर्वाणीन्द्रियाणि प्राप्यकारीणीति वेदाऽविरोधिनः प्राणसंसृष्टस्य

घ्राणेन, रसनासन्निकृष्टस्य रसनया, चक्षु सन्निकृष्टस्य चक्षुषा, त्वक्संसृष्टस्य त्वचा, श्रोत्रप्रत्यासन्नस्य श्रोत्रेण, मनःसन्निकृष्टस्य मनसा ग्रहणादिति ॥

अत्र बौद्धाः संगिरन्ते सर्वेषामिन्द्रियाणां न प्राप्यकारित्वं, किंतु घ्राणरसनत्वचामेव, यत एतयामेव विषयसम्बन्धो घटते, चक्षुःश्रोत्रयोस्तु विषयदेशगमनासम्भवात् विषयस्य च तद्देशाऽऽगमनासंभवादिमे स्वस्थानस्थे अप्राप्यैव दूरावस्थितं विषयं प्रकाशयतोऽतो न प्राप्यकारिणी इति ।

जैनास्तदपि नानुमन्यन्ते, न एवं समादधति यत्सापूक्तं बौद्धैर्नयनस्याप्राप्यकारित्वमिति, शब्दस्य तु आणविकस्य सावयवस्य सक्रियद्रव्यस्य श्रोत्रदेशाऽऽगमनसम्भवात् न श्रोत्रस्याऽप्राप्यकारित्वम्,। अतएव महता शब्देनाभिहतस्य कर्णपटहस्य विभेदेन बाधिर्यमप्युपलभ्यते। चक्षुषस्तु प्राप्यकारित्त्व न संभवत्येव, यतः प्राप्यकारित्वे शाखाचन्द्रमसोः समकालग्रहणं न स्यात् गृह्येते च तावेककालमेव नयने विस्फारितेऽतो न प्राप्यकारि चक्षु. । तत्रानुमानमप्येवं –यच्चक्षुर्न प्राप्य विषयं गृह्णाति कोशव्यवहितयोस्तुल्यकालग्रहणजनकत्वात्. यद्यत् प्राप्यकारि तत्तत्कोशव्यवहितो तुल्यकालं न गृह्णाति, यथा रसना, गृह्णाति च चक्षुस्तथा तस्मान्न प्राप्यकारीति। नन्वत्र तुल्यकालग्राहित्वं स्वरूपाऽसिद्धं, नैयायिकादिभिस्तत्र क्षणभेदस्य स्वीकारादिति चेत् न सहैव पश्यामीत्यनुव्यवसायानुपपत्तेः नच चाक्षुषतेजसोऽतिशयितवेगवत्तयाऽऽलोकस्येव क्रमप्रकाशकत्त्वं न प्रतीयते, अतएवोत्पलशतपत्रभेदस्थले सह भिनद्मीतिवत् सम पश्यामीत्यनुव्यवसायो भविष्यतीति वाच्यम्' तत्तेजसत्त्वाऽसिद्धे ,भास्वररूपादेस्तत्राप्रतीयमानत्त्वात्, नचानुद्भूततया तद्रूपादेः प्रत्यक्षं न भवतीति वाच्यम् ? अनुद्भूतरूपस्य तस्य सुवर्णादेरिव वस्तुप्रकाशकत्वानुपत्ते , अतएवाऽऽलोकसहकारमपेक्षते –इतिचेन्न, तर्हि घटपटादयोऽप्यालोकसहकारेण पदार्थसार्थप्रकाशका भवेयु , आलोकस्यापि यत्सहकारित्व कल्पित, तदघ्युलूकवृषदशादेरालोकाऽसहकारेणैवान्धतमसे प्रत्यक्षोदयेन नानुमोदमर्हति । ननु तेषां स्फीतान्धकारेऽपि दृश्यमाननयनाऽऽलोकेन

इतरवस्तुजातं प्रत्यक्षं सम्पद्यत इति चेत् ! तथा सति तद्दर्शना-लोकप्रकाशितवपुषां पदार्थानामस्मदीयप्रत्यक्षविषयता स्यात्, नच सूक्ष्मत्वात्तैः किरणैरस्माकं प्रत्यक्षं न भवतीत्यपि योग्यम्, तर्हि मूषक-परिपन्थिनामपि तत्सहकारेण प्रत्यक्षं न स्यात्। अपिच चक्षुषो रश्मिवत्त्वे चक्षुर्दृष्टकाचकूपोदरास्थितजलानां चक्षूरश्मिप्रवेशमार्गेण प्रपातः स्यात्। नच चक्षुस्तैजसं परकीयस्पर्शाव्यञ्जकत्त्वे सति परकीयरूपव्यञ्जकत्त्वा-दित्यनुमानमेव प्रदीपदृष्टान्तेन नयनस्य तैजसत्त्वं साधयिष्यतीति वार्त्तम् ? अञ्जनादिषु व्यभिचारात्, अतस्तैजसत्त्वासिद्ध्या तेनापि रश्म्यनुमानाऽसंभवात् न चक्षुषो रश्मिवत्ता, नापि तदधीनं प्राप्यकारित्त्वम्, मार्जारा-दीनां नेत्रेऽपि न रश्मिरुपलभ्यते अपितु चाकचिक्यमात्रम्।

एवं चक्षुरप्राप्यैव विषयं गृह्णाति प्राणरसनत्वक्श्रोत्रान्येन्द्रियत्त्वात् मनोवदित्यनुमानमपि अप्राप्यकारित्त्वे मानम्, एतेन उत्पलशतपत्रभेदवद् वृक्षचन्द्रमसोस्तुल्यकालग्रहणे क्षणभेदो विद्यमानोऽपि न गृह्यत इति परास्तम्। अतो योग्यतावशादेव स्वस्थानस्थं चक्षुर्विषयं-प्रकाशयतीति।

अत्रानेकान्तप्रतिभिर्यत्तैजसत्वानुमाने व्यभिचारोऽञ्जनादिषु प्रादार्शि तत्तेषामसमीक्ष्यकारित्त्वमेव प्रकटयति, यतोऽञ्जनादीनां नार्थप्रकाशकत्त्व-मपितु प्रतिबन्धकमालिन्यापनायकत्त्वमात्रमतो न तत्र व्यभिचारः।

किञ्च स्पर्शाव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वहेतौ प्रभादृष्टान्ते तैजसत्त्वसाधके नाञ्जनादिषु व्यभिचारशङ्काऽपि, तेन च सिद्धे तैजसत्त्वे तदधीनरश्मिवत्तापि भवितुमर्हति, तथा मार्जारादिचक्षुषि चाकचिक्यमात्र सत्त्वे चाकचिक्यविशिष्टकाचरजतादिवद् गाढान्धकारे तन्नेत्रस्य प्रत्यक्षं न स्यात् अतः क्षुद्राङ्गारवत्पदार्थान्तराऽप्रकाशकत्त्वेऽपि स्वयं तेजस्त्वादेव तन्नेत्रं तत्र प्रकाशते। दिनकरखरकरनिकरसरणसरण्या अपतिष्णोः काच कूपोदरगतजलस्य नयनरश्मिमार्गेण प्रपातः स्यादिति तु बालभाषितम्। द्वितीयानुमानंत्वनुकूलतर्कविरहादश्रद्धेयमिति।

अत्र ~~कन्दर्पीकसरश्रीमस~~ऽऽचार्या एवं कथयन्ति यत् क्षुद्रं चक्षुस्तथा बाह्यालोक एतयोः संयोगेन विशालमन्यच्चक्षुरुत्पद्यते, तच्च समकालमेव शाखाचन्द्रमसौ प्रकाशयतीति । तत्र क्षुद्रचक्षुषा सम्मुखस्यबाह्यालोकस्यैव संयोगेन महच्चक्षुरुत्पद्यते न तु पाश्चात्त्यबाह्यालोकस्य संयोगेनेत्यत्र प्रमाणं मृग्यं विद्वद्भिः । तथा स्वीकारे च पाश्चात्त्यवस्तूनामपि प्रत्यक्षमापद्येत इति ।

पाश्चात्त्यास्तु—चक्षुषो न स्वतन्त्र आलोको नापि पार्थिवादिवस्तूनां किमपि स्वकीयं रूपं, केवलस्यालोकस्यैव सर्वविधं रूपं विद्यते, आलोकस्तु यद्रूपविशिष्टः सँश्चक्षुषि पतति तस्यैव रूपस्य प्रत्यक्षं भवति ।

ननु यद्यालोक एव सर्वाणि रूपाणि विद्यन्ते तर्हि एकस्य कस्यापि रूपस्य प्रत्यक्षं न स्यादपितु सर्वेषां रूपाणां सहैव प्रत्यक्षं स्यात्, न स्याच्च पार्थिववस्तूनां तत्तद्रूपविशिष्टतया प्रत्यक्षम्, भवति च, अतः पार्थिवादिवस्तूनामपि तत्तद्रूपमवश्यं स्वीकार्यमितिचेन्न, यतः आलोकस्य सर्वरूपवत्त्वेऽपि आलोको यदा पार्थिवादिवस्तुषु पतति तदा पार्थिवादिवस्तूनि स्वस्मिन् दृश्यमानं यद्रूपं तद्व्यतिरिक्तं सर्वमेव वर्णजातं आलोकादाकृष्य स्वस्मिन् विलापयति, आलोकश्च ततः परावर्त्तमानोऽनाकृष्टं यद्रूपं तेन विशिष्टश्चक्षुषि पतन् पार्थिववस्तुनः प्रतिबिम्बरूपतां धत्ते, ततः पार्थिवतयाऽऽलोकस्यैव रूपं दृश्यते । प्रतिबिम्बोऽपि नालोकातिरिक्तः कश्चन पदार्थः किंतु वस्तुजातपतितपरावर्त्तमानाऽऽकृष्टेतररूपआलोक एव यदा दर्पणादौ पतति तदा तस्मिन्नालोके इतररूपाऽभावाद्दर्पणादिस्थगृहादिपतितपरावृत्तालोक एव गृहाद्याकारतया गृह्यते, तादृशालोक एव प्रतिबिम्ब इत्युच्यते ।

ननु तर्हि तद्रूपविशिष्टालोक एव गृह्यताम् गृहाद्याकारस्तु कथं गृह्यत इति चेत् ? आलोकस्य सन्निवेशविशेषेण तथा प्रत्ययोदयात् ।

ननु पार्थिवादिवस्तुजातस्यालोकरूपग्राहकत्वे किं मानम् ? प्रत्यक्षादीनामन्यथानुपपत्तिरेव, कथमितिचेत् ? इत्थम्, प्राप्यकारीणि खल्विन्द्रियाणि, नहि चक्षुर्गतिमत्रापि विषयः अथच प्रत्यक्षं भवति तच्चेन्द्रियसन्निकर्षं विना नोपपद्यते अतस्तत्सन्निकृष्टालोकद्वारेण प्रत्यक्षोपपत्तिः कल्पनीया, सापि सर्वविधरूपवदालोकसन्निकर्षेण नोपपद्यतेऽतस्तत्तद्रूपविशिष्टालोकेनैव सोपपादनीया, आलोकस्य तत्तद्रूपवत्तापीतररूपग्रहणेन विना नोपपद्यतेऽतः पृथिव्यां तत्तद्रूपग्रहणसामर्थ्यमङ्गीकार्यम् । ननु तादृशसामर्थ्यसत्त्वे पृथिव्या सर्वरूपमेव गृह्यताम् ? न, यस्य यद्रूपग्रहणसामर्थ्यं तत्तद्रूपमेव गृह्णाति न सर्वं सर्वरूपम्, यथाऽयस्कान्तो लौहमेव गृह्णाति न तु ताम्रम् । तत्तद्रूपग्रहणसामर्थ्यञ्चेतररूपाणामप्रत्यक्षतया कल्प्यते इत्युक्तम्, तत्रापि शुक्लतया दृश्यमानपदार्थस्य रूपग्राहकत्वमेव नास्ति अतस्तस्मात् परावर्त्तमान आलोकः समानसकलवर्णकचित्रितघूर्ण्यमानचक्रवच्छुक्ल एव प्रतिपद्यते, कृष्णतया दृश्यमानपदार्थस्यतु सर्वरूपग्राहकत्वमत स्ततः परावर्त्तमानाऽऽलोके कस्यापि रूपस्याभावादसौ नीरूपान्धकार इव कृष्ण एव गृह्यते, अतः शुक्लं कृष्णञ्चातिरिक्तं रूपं नास्त्येव, रूपसमष्टिरेव शुक्लो, रूपसामान्याभाव एव कृष्ण इति ।

नन्वालोकस्य सर्वरूपवत्त्वे एव किंमानम् ? नहि तत्र शुक्लेतरत्किञ्चन रूपमुपलभ्यत इति चेत् ? न, प्रत्यक्षत एवाऽऽलोके सर्वरूपोपलम्भात्, कथमितिचेत् त्रिकोणकाचेन उन्मध्यकाचेन चाऽऽलोकप्रत्यक्षकाले तत्प्रत्यक्षोदयात्, नहि तत्र काचस्य तानि रूपाणि, नापि काचस्येदृशो महिमा येनासदपि तत्तद्रूपं प्रकाशयति, अतस्तत्र दृश्यमानरूपजातस्याधिकरणान्तराऽसम्भवादाऽऽलोक एव तदधिकरणम् । तथेन्द्रधनुषि मुखप्रक्षिप्यमाणजलपतितसूर्यालोके च प्रत्यक्षत एव सर्वरूपोपलम्भात् । एवं सूर्याऽऽलोकत उन्मध्यकाचेन रूपविभागस्य प्रत्यक्षोदयेन स एव सर्वरूपाधिकरणम् !

अतएव प्रातःसायंकालयोः सूर्यस्य रक्ततया दर्शनमप्युपपद्यते । सूर्यस्य तत्प्रकाशस्य वा स्वतः शुक्लत्वे तन्न स्यात्, रक्तरूपस्य तत्राभावात्, अस्मन्मते च सूर्यतः क्रमेण तत्तद्रूपविशिष्टाः किरणा आगच्छन्ति, यादृशवर्णविशिष्टा यदीयकिरणा श्चक्षुषि पतन्ति तादृशरूपवत्तदेव तद्वस्तु गृह्यते तथाच सूर्यतः प्राता रक्तकिरणाः प्रथममागच्छन्ति, अतस्तदा सूर्यो रक्तो दृश्यते, ततःक्रमेण अन्यान्यकिरणा अपि विभिन्नरूपवन्त आगच्छन्ति, तेन सूर्यः क्रमेण विभिन्नरूपविशिष्टतया दृश्यते, एवंरीत्या यदा सर्वविधाः किरणा आगच्छन्ति तदा सूर्यः शुक्लतया दृश्यते, एवं मध्याह्नात्परतः सूर्यस्य किरणा एकैकक्रमेण ह्रसन्ति, तेषांच क्रमेण ह्रासे सूर्यस्य वर्णव्यत्ययोऽपि वृद्धिविपरीतक्रमेण दृश्यते, अन्ततः सायं रक्तकिरणागमात् सूर्यो रक्तो दृश्यते, सूर्यस्य तदालोकस्य वा स्वाभाविकैकरूपवत्त्वे क्रमेण विभिन्नरूपवत्तया दर्शनं नोपपद्यते अत आलोक एव सर्वरूपाधिकरणम् ।

एतेच किरणा नाणविका अपितु शक्तिविशेषा अतिरिक्ता एव, तेच गतिमदाकाश (ईथर) तरङ्गसम्पर्केणगतिमन्तो भवन्ति, चक्षुषि चोन्मध्यकाच इवोन्मध्यः स्वच्छधर्मविशेषो दृश्यमान उपरिभागे विद्यते तन्मध्यत आलोको गच्छन्नुन्मध्यकाचविनिर्गतालोक इव चक्षुःपिण्डपश्चादवस्थितप्रतिसारायां (रेटिनानामिकायां) स्वच्छचक्षुर्गोलकमार्गेण पतन् यस्मादाधारादालोक आगच्छति तदाधाराकाराकारितो विपरीतप्रतिबिम्बरूपतां धत्ते तेनैवास्माकं प्रत्यक्षम्भवतीत्येवं समाद्धते ॥

अत्रेदमालोचनीयम्, किमालोकस्यैव सर्वरूपमुत पृथिव्या अपि किञ्चन स्वतन्त्रं रूपमस्ति, यदितावत्पृथिव्याः स्वीयं किमपि रूपं नास्ति आलोकरूपेणैव तस्याः प्रत्यक्षं भवति, आलोकाच दृश्यमानेतररूपं पृथिवी समाकर्षति, तदा कुड्यादिपून्मध्यकाचेन पाश्चात्यवस्तूनां प्रतिबिम्बो न गृह्येत यतस्तदन्तर्विनिर्गताऽऽलोकात् कुड्यादिना स्वस्मिन् दृश्यमानेतरेषां रूपाणां समाकर्षणात् कुड्यादिरूपमेव विलोक्येत नतु काचपाश्चात्यवृक्षादि-

रूपम्, दृश्यते च तद्वतस्तथा तादृशसामर्थ्यस्य पृथिव्यां सत्त्वे पार्थिववस्तुन उपरि उन्मध्यकाचेन आलोकरूपाणां विभागो न दृश्येत, दृश्यते चातश्च न पृथिव्यास्तादृशरूपसमाकर्षणशक्तिरस्तीति स्वीकार्यम् ।

ननु नैर्मल्यं चाकचिक्यं वा रूपग्रहणे प्रतिबन्धकम्, अतएव दर्पणादौ यथावद् वस्तुस्वरूपं दृश्यते कुड्यादौ च किञ्चिच्चाकचिक्यसत्त्वेन कुड्यादिकं सर्वरूपं न ग्रहीतुमलम्, अपि तु स्वल्पं गृह्णात्यतस्तत्र प्रतिबिम्बो गृह्यमाणोऽपि स्पष्टतां नाधत्ते, कज्जलादौ च प्रतिबिम्बो न दृश्यते तत्र स्वल्पस्यापि चाकचिक्यस्य विरहात्, तथा पार्थिवादिपदार्थेषु परिमितरूपग्रहणसामर्थ्यमस्ति ननु अधिकरूपग्रहणसामर्थ्यम् यत एतावदेव रूपं गृह्णाति यथा जलपात्रस्य स्वगतावकाशपरिमितजलग्रहणसामर्थ्यम् अधिकजलप्रक्षेपे तु यथा जलं स्थानमनासाद्य परावर्तते तथैव कुड्यादिषु उन्मध्यकाचेन विनिर्गताऽऽलोक आधिक्येन पतन् तत्राधिकरूपग्रहणसामर्थ्याभावात् स्थानमनासादयन् स्वीयरूपं सनाथीकृत्यैव कुड्यादिभ्यः परावर्त्तते तेनैव तत्र पाश्चात्यवस्तुप्रतिबिम्बो दृश्यत इति चेत् ? न, यतस्त्वन्मते सूर्यकिरणा यदा बहिः कुड्यादिष्वन्येनाऽप्रतिहता अधिकतराः पतन्ति तदा तेभ्यः कुड्यादयः स्वस्मिन् दृश्यमानेतरसकलरूपमेव गृह्णन्ति अन्यथा तदा तेषां तत्तद्रूपवत्तया प्रत्यक्षं न स्यादतोऽधिकालोकतोऽप्यधिकरूपग्रहणसामर्थ्यमङ्गीकार्यम्, एवञ्च सति यदात्वन्येन प्रतिहतास्तएवाऽऽलोका गृहमध्यकुड्यादिषून्मध्यकाचमार्गेण पतन्ति तदा ते बहिःकुड्यादिपतितालोकतो नाधिका अपितत्यन्तं न्यूना स्तदैव तु तत्र प्रतिबिम्बो दृश्यते तदा तदालोकत स्ते कुड्यादय स्तदालोकाधिक्येन तद्वीयरूपं न गृह्णन्तीति वार्त्ता निपीतकालकूटस्याहिखेलनाऽसामर्थ्यकथनमनुकरोति !

नाप्युन्मध्यकाचसन्निधाने यावानालोक आगच्छति तत्सन्निधाने ततोऽधिको येनाधिकरूपग्रहणसामर्थ्याभावात्तद्रूपं कुड्यादयो न गृह्णन्तीति युज्येत, अतः काचसन्निधानेऽपि तादृशसामर्थ्यस्याप्रतिहतत्वेन कुड्या-

दय स्तदालोकतो रूपं गृह्णीयु स्तथाच न दृश्येत तत्र प्रतिबिम्बो, दृश्यते चातोऽधिकरूपग्रहणसामर्थ्याभावात् कुड्यादयोऽधिकरूपं तदा न गृह्णन्तीति रिक्तं वचः ॥

नापि चाकचिक्यस्य रूपग्रहणप्रतिबन्धकत्वं घटते, यत श्चाकचिक्यं नाम न कश्चनातिरिक्तः पदार्थोऽपितु उपरितनावयवानां समनिविष्टतयाऽवस्थानमेव तत्, तेनचालोकस्येतस्ततोऽविच्छुरणाद्र यथावत् तदाधारत आलोकः प्रत्यावर्त्तते तेन प्रतिबिम्बो दृश्यते दर्पणादीनाम्प्रतिबिम्बप्रदर्शकत्वेऽप्येतदेव कारणम्। कुड्याद्युपरितनावयवानाञ्चोचावचत्वेन तत्पतितालोकस्येतस्ततो विच्छुरणाच्चक्षुरादौ यथावत् स आलोको न परावर्त्तते तेन तत्र प्रतिबिम्बो न दृश्यते, अतएव दर्पणकुड्यादिषु प्रतिबिम्बग्रहणाग्रहणयोरुपपत्तौ किमर्थं चाकचिक्यस्य रूपग्रहणप्रतिबन्धकत्वमुपगन्तव्यम् ( अत्रालोकगते. प्रतिकृतिरवबोधायापेक्ष्यते ) ॥

अपिच चाकचिक्यस्य रूपग्रहणप्रतिबन्धकत्वे दर्पणकाचस्योपरिभागे प्रतिबिम्बो विलोक्येत नतु पश्चाद्भागे चाकचिक्यविशिष्टोपरितनभागेनैव रूपग्रहणप्रतिरोधात् उन्मध्यकाचविनिर्गतालोकरूपग्रहणप्रतिरोधककुड्यादिचाकचिक्यप्रतिरोधजन्यप्रातिबिम्बवत्।

अन्यच्च रूपग्रहणसमर्थोपरितनावयवा' समावस्थितिरूपसंयोगविशेषेण न रूपग्रहणासमर्था भवितुमर्हन्ति, नहि वह्निरेव स्वावयवसंयोगविशेषवशात् स्वीयां दाहशक्तिं निरुणद्धि। अतस्त्वन्मते चाकचिक्यविशिष्टवस्तुन्यपि रूपग्रहणसामर्थ्यमङ्गीकार्यम् तथाच न दृश्येत तत्र प्रतिबिम्ब उन्मध्यकाचेनापि, दृश्यतेच अतोऽपि न पृथिव्यादीनान्तादृशरूपसमाकर्षणशक्ति रस्ति। प्रतिबिम्बश्च यत्रालोकगतेः प्रतिरोध स्तथोपरितनावयवसमत्वोन्मध्यकाचादिघृतालोकसङ्ग्रहयोरन्यतरश्च वर्त्तते तत्रैव जायत इति स्वीकार्यम्।

यच्चोक्तम् चाकचिक्यविरहात् कज्जलादिषु प्रतिबिम्बो न लक्ष्यत इति, तदप्यसमीक्षिताभिधानम् यत कज्जलादावप्युन्मध्यकाचेन प्रतिबिम्बस्य प्रत्यक्षोदयात्। ननु कज्जलादौ तथा प्रतिबिम्बो न दृश्यते यथा शुक्ले

वस्तुनि, अतस्तत्र रूपग्रहणसामर्थ्यमङ्गीकार्यमन्यथा शुक्ल इव तत्रापि स्पष्टः प्रतिबिम्बो लक्ष्येतेति चेत्, न, तत्र कृष्णरूपसम्मिश्रणेन प्रतिबिम्बस्य यादृशं रूपं भवेत्तादृशमेव रूपं दृश्यते यथा शुक्ले शुक्लरूपसम्मिश्रणेन प्रतिबिम्बस्य यादृशं रूपं भवति तादृशमेव लक्ष्यते नत्वन्यथाऽतस्तत्र रूपग्रहणसामर्थ्यं किमर्थमुरीकार्यम् ॥

ननु सिद्धे पृथिव्यादीनां रूपवत्त्वे तदधीनः सम्मिश्रितरूपः प्रतिबिम्बो भवितुमर्हतीति तदेव त्वयापि न सिद्धम् यत स्त्रिकोणादिकाचेनोन्मध्यकाचेन वाऽऽलोक एव सर्वरूपाणाम्प्रत्यक्षत उपलब्धे स्तत्र सर्वविधं रूपमङ्गीकार्यम् पृथिव्यादेश्चालोकं विना चाक्षुषप्रत्यक्षानुदयात् पृथिव्यादीनामालोकरूपग्रहणसामर्थ्याङ्गीकारेणैवोपपत्तौ तेषां स्वतन्त्ररूपस्वीकारो निरर्थक इति चेत् । स्यादेतदेवम्, यदि पृथिव्यादीनां रूपग्रहणसामर्थ्यमुपपन्नम्भवेत्तदेव तु पूर्वोक्तयुक्त्या नोपपद्यते ।

नाप्यालोकं विहाय तदीयरूपं पार्थिव्यादिना ग्रहीतुं शक्यम्, नहि पार्थिवांशं परित्यज्य तदीयो गन्धः केनाप्याहर्तुं शक्यते, आश्रयग्रहणं विना नियताश्रयिग्रहणासम्भवात् । अत सरूप आलोक एव गृह्यते इति चेत् । तर्हि कृष्णवस्तुनः कथमपि प्रत्यक्षं न स्यात् कृष्णवस्तुना तत्पतितसर्वालोकग्रहणादालोकद्वारेण चक्षुषि प्रतिबिम्बासम्भवेन प्रतिबिम्बद्वारा तत्प्रत्यक्षासम्भवात् । ननु तत्र प्रतिबिम्बो न जायत एवापितु यदंशे कृष्णरूपं दृश्यते, तदंशे चक्षुषि आलोकस्याप्रपातेन तत्र किमपि रूपं न दृश्यते ऽतएवान्धकार इव कृष्णत्वस्य भ्रमो भवतीतिचेत् ? एवं सति कज्जलरयोपरित स्तस्योच्चावचता न गृह्येत तस्मादालोकागमासम्भवेन तस्याः प्रतिबिम्बासम्भवात् ॥

यत्तु कृष्णवस्तुनः सरूपालोकग्राहकत्वे तत आलोकागमाभावे च चक्षुषो यदंशे कृष्णवस्तुत आलोकाप्रपातेन कृष्णरूपं दृश्यते तदंशे कृष्णवस्तुपार्श्वस्थितापरपदार्थागतालोकेन पार्श्वस्थापरपदार्थानामन्यप-

तिबिम्बोत्पत्त्याऽनेकत्वेन दर्शनं स्यात्, तिमिररोगद्विधाकृतालोकपातजन्यप्रतिबिम्बद्वयाधीनद्विचन्द्रदर्शनवत् दर्पणे तन्मध्यापरदर्पणे च यथा युगपदेवानेकप्रतिबिम्बो दृश्यते तद्वा इत्यतो न कृष्णवस्तुनः सकलरूपग्राहकत्वं नवा सरूपालोकग्राहकत्वं नवा तदधीनालोकाप्रपाताधीन कृष्णरूपदर्शनमिति, तन्तु आलोकमध्यस्थपुंसो गुहाभ्यन्तरान्धकारप्रत्यक्षानुदयप्रसङ्गादुपेक्षितम् ॥

अपिचालोकस्य प्रतिपरमाणु सर्वविधं रूपमुत प्रतिपरमाणु विभिन्नं तत्र नाद्यः पक्ष. प्रेक्षावत्प्रेक्षागोचरो निरवयवे परमाणौ एकस्मिन् व्याप्यवृत्तेरव्याप्यवृत्तेर्वा रूपसमुदायस्यासम्भवात्, नापि द्वितीयः निरन्तरगतिमत्तैजसपरमाणुसमुदायव्यतिरेकेणालोकावयविनोऽचलस्याभावेन परमाणौ च नानारूपाभावेन पृथिव्यादिकं कुतो दृश्यमानेतररूपं गृह्णीयात्। ननु समुदायत एवेति चेत् । तर्हि रक्तकाचमध्यमागतेनालोकेन रक्तेतरस्य नीलपीतादिवस्तुनः कस्यापि तत्तद्रूपवत्तया ग्रहणं न स्यात् रक्तकाचेन रक्तेतरेषां सर्वेषां रूपाणां ग्रहणाद् रक्तस्य च पीतादिभि र्ग्रहणात् । एवमुक्तयुक्त्या रक्तोपनेत्रेणापि तत्तद्रूपवत्तया वस्तुप्रत्यक्षं न स्यात् ॥

नन्वालोकोऽस्माभि र्न परमाणुरूपो नाप्याणविकोऽभ्युपगम्यतेऽपितु शक्तिविशेषरूपो गतिविशेषरूप ( एनार्जी ) एव वासौ स्वीक्रियतेऽतोऽणुपक्षाक्षिप्तदोषाणामनवकाश एवात्रेति चेत् । अनाणविकत्वेऽपरमाणुरूपत्वे चास्य सङ्ग्रहगतिमत्त्वाद्यनुपपत्ते. सङ्ग्रहो हि संयोगरूपः सच शक्तिविशेषस्य गतिविशेषस्य वा न सम्भवति संयोगस्य द्रव्याश्रितत्वात् । नापि तस्यानाश्रितशक्तिरूपत्वे तादृशगतिरूपत्वे वा व्याटारीनामकस्थाने तस्य बन्धो भवेत्, मूर्तं हि मूर्त्तान्तरं बध्नाति नत्वमूर्त्तम् नहि शक्तिर्गतिर्वा मूर्त्ता येनास्य बन्ध. स्यात् अत स्तादृशशक्तिविशेषस्य गतिविशेषस्य वाऽन्याश्रितत्वमवश्यमुपेयम् । अन्यश्च च व्यापकत्वे गत्याद्यसम्भवाद् अव्यापकत्वमङ्गीकार्यम् । अव्यापकस्य च संस्थानवतो माध्यमिकद्रव्यस्य अनाणविकस्यासम्भवादाणविकत्वमप्यालोकस्याङ्गीकार्यम् ॥

अपिचालोकस्य शक्तिविशेषरूपत्वे गतिविशेषरूपत्वे वा संस्थानविशेष वशात्प्रतिबिम्बरूपताऽपि न घटते संस्थानस्यावयवसंयोगरूपत्वात् तस्यच शक्त्यादावसम्भवात् गतिप्रतिघातयोश्च तत्रासम्भवात् ॥

अतः प्रतिव्यक्ति विभिन्नरूपवन्तो निरन्तरगतिमन्तश्च ये तैजसाः परमाणवस्तेषां समूह एवालोक इति मन्तव्यम् ॥

अन्यच्च यदुक्तम्, गतिमदाकाश (ईथर) तरङ्गसम्पर्केणालोको गतिमान् भवतीति, तत्तु युक्त्या न युज्यते, यतस्त्वन्मते आकाशो व्यापकोऽव्यापको वा, व्यापकत्वे गतिरेव न स्यात् गतिप्राप्तव्यस्य देशस्याभावात्। अव्यापकत्वे तु यस्यां दिश्याकाशस्य गति स्तदभिमुखस्य पुरुषस्य तद्दिग्वर्त्तिस्थितवस्तुजातप्रकाशो न स्यात् आकाशस्य तच्चक्षुरभिमुखगत्यभावेन तच्चक्षुषि प्रतिबिम्बासम्भवात् । तस्माच्च गृहमध्यस्थदीपेन सर्वदिग्वर्त्तिस्थितवस्तूनां समकालग्रहणम् । तथा तादृशाकाशशून्यदेशीयवस्तूनामालोकेनापि ग्रहणम् न स्यात् । न स्याच्च सूर्यादितोऽत्रालोकस्यागमनम् । अतो नाकाशगत्या ऽऽलोकस्य गतिरपितु स्वतन्त्रैवेति स्वीकार्यम् ॥

अपरञ्च पाश्चात्यमतानुसारेणोक्तयुक्त्या गन्धोऽपि वायुगुण एव स्यात्, तत्तत्पृथिव्यां तत्तद्गन्धग्रहणसामर्थ्याङ्गीकारेणैवोपपत्तौ पृथिव्या निर्गन्धत्वेऽपि क्षत्यभावात्, शुक्रेरालोकवद्रत्नापि समानत्वात् अतो गन्धइव रूपमपि पृथिव्यामभ्युपेयम् । अन्यथा रक्तकाचमार्गागतालोकेन नीलपीतादिवस्तूनां कथमपि तत्तद्रूपवत्तया प्रत्यक्षं न स्यात्, तथा रक्तोपनेत्रेणापि तथा प्रत्यक्षं न स्यात् । तत्स्वीकारे च तत्रापि तत्तद्वस्तुपतितरक्तालोकसहकारेण समागतनीलपीतादिरूपविशिष्टपार्थिवांशस्य चक्षुषि पतनेन प्रतिबिम्बतामापन्नस्य तत्तद्रूपवत्तया प्रत्यक्षे न कोऽपि दोषः पदमादधाति ॥

अस्मन्मते च सूर्यकिरणानामपि विभिन्नरूपवत्तया विभिन्नरूपवत्किरणसमागमेन विभिन्नरूपवत्तया सूर्यतदालोकयोः प्रत्यक्षं सम्पद्यत एव ।

तथा तत्किरणविभागोऽप्युन्मध्यकाचादिना, तथा कुड्यादावुन्मध्यकाचेन पाश्चात्यवस्तूनां प्रतिबिम्बोऽपि बाधितो न भवति ॥

नन्वेतन्मते निरवयवानामिलेक्ट्रोन्प्रभृतीनां प्रत्यक्षं न स्यात् ततः कस्याप्यंशस्यागमासम्भवात् इति चेत् ? न, तेषां निरवयवत्वासिद्धेः तथाहि ते साकारा निराकारा वा, न तावन्निराकारास्तथाभूतद्रव्याणां प्रत्यक्षानुद्यात् साकारत्वे तु सुतरां सावयवत्वसिद्धिः ॥

न च तथापि पृथिव्यादित आलोकेन सह तदंशागमाभ्युपगमे तदंशान्वयेन पीतत्वादिना दृश्यमानशुक्लालोकतोऽपि सूर्यालोकत इव वर्णविभागः स्यात् न च भवति तस्मात्तत्तद्रूपग्राहकत्वमङ्गीकार्यम् तत्तद्वस्तूनामितिवाच्यम् ! तदालोकतोपि वर्णविभागोदयात् ॥

अन्यच्च सवर्णप्रतिकृतिः प्रतिकृतिग्राहकयन्त्रेण गृह्यते तदप्यसमन्मतमेव सुपोषयति, नहि तत्र पूर्वलोको बद्धो येन पूर्वरूपं प्रकाशयेदिति ॥

अत्रेय शङ्कोदेति, किंमत्वेव चक्षुर्विषयम्प्रकाशयति उत प्रतिबिम्बप्रकाशकदर्पणवद् रसनादिवच्च समागतविषयमेव प्रकाशयतीति ?

तत्रोत्तरम्, यत्प्रतिबिम्ब एव चक्षुषि पतितो गृह्यते ।

ननु स्यादेतदेवम् यदि प्रतिबिम्बो नाम कश्चन पदार्थो जगति स्यात् स एव तु नास्ति प्रमाणाभावात् । ननु दर्पणादौ प्रतिबिम्बग्राहकप्रत्यक्षप्रमाणस्यैव सत्त्वात्कथमुच्यते प्रमाणाभाव दर्पणादौ मन्मुखप्रतिबिम्बम्पश्यामीत्याबाधितानुभवोदयादिति चेत् ? न, तत्र दर्पणादिप्रतिहत नायन तेजः स्वस्यानस्यमुखमेवप्रकाशयति न तु दर्पणे प्रतिबिम्बो गृह्यते मुखस्य दर्पणादिदेशताप्रतिपत्तिस्तु भ्रमरूपा दोषाद् भवति, दोषत्वश्चान्वयव्यतिरेकाभ्यां चाकचिक्यस्य । अतएव न्यायभाष्येऽपि भगवता वात्स्यायनेनोक्तम्, "यथाऽऽदर्शप्रतिहतस्य परावृत्तस्य नयनरश्मेः स्वेन मुखेन सन्निकर्षे सति स्वमुखोपलम्भनम्प्रतिबिम्बग्रहणाख्यमादर्शरूपानुग्रहात् तन्निमित्तम्भवति आदर्शरूपोपघाते कुड्यादिषु प्रतिबिम्बग्रहणं न भवती" ति ।

तथा, भामत्यां श्रीमद्वाचस्पतिमिश्रैरप्युक्तम् यत् "एवं विज्ञातुपुरुषाभि-मुखेष्वादर्शोदकादिषु स्वच्छेषु चाक्षुषं तेजो लग्नमपि बलीयसा सौर्येण तेजसा प्रतिस्रोतः प्रवर्तितं मुखसंयुक्तं मुखं ग्राहयत्तद्देशतामनभिमुखताश्च मुखस्याग्राहयत् पूर्वदृष्टाभिमुखादर्शोदकादिदेशतामाभिमुख्यश्च मुखस्यारोपयतीति प्रतिबिम्बविभ्रमोऽपि लक्षितो भवती" ति ॥

अतः प्रतिबिम्बस्यातिरिक्तस्याभावात् न प्रतिबिम्बग्राहकत्वं चक्षुष इति चेत्! न, अस्वच्छकुड्यादेरुपरि उन्मध्यकाचेन पाश्चात्यवस्तुप्रातिबिम्बपाते सति तत्प्रत्यक्षोदयेन प्रतिबिम्बस्यावश्यमभ्युपेयत्वात्, नहि तत्रापि चाक्षुषं तेजः प्रतिहतं परावर्त्तमानं बिम्बभूतवृक्षादिकमेव प्रकाशयति, तथासति गतमादर्शोदकादेरेव नायनतेजःप्रतिघातकत्वेन, तथात्वे तु कुड्यादावपि दर्पणवन्मुखं प्रतिभासेत ॥

ननु कस्मिन् पदार्थे सोऽन्तर्भूत इतिचेत्? उच्यते, ज्ञातमेव विद्वद्भिर्यद् गतिमद्वस्तुसंसर्गात् परमाणवस्त्रुटयो वा गतिमन्तो भवन्तीति अन्यथा-गन्धादीनामपि प्रत्यक्षं न स्यात्, अथवा घ्राणादीनामपि पुष्पादिदेशगामित्वं स्वीकार्यम् अतो यथा गतिमद्वायुसंसृष्टानां त्रसरेणूनां घ्राणसम्पर्कात्पुष्पादिगन्धः आघ्रीयते तथैवाविरतगतिमदालोकसम्पर्काद्रूपवन्तः पार्थिवाद्याःपरमाणवस्त्रुटयस्ततः स्थूलाः पार्थिवाद्यंशा वा तादृशगतिमन्तः सन्तः स्वच्छे चक्षुरिन्द्रियाधारे पतिताः स्वापादानतः क्रमपतनेन स्वापादानाकाराकारिता गृह्यन्ते सङ्गृहीतास्ते एव प्रतिबिम्बसंज्ञां लभन्ते। एवमेव दर्पणादिषु सङ्गृहीता अपि ॥

ननु तत्तत्पार्थिवाद्यंशास्तेजःसहकारेणागच्छन्तीत्यत्र किम्मानम् ? रक्तकाचान्तर्विनिर्गतालोकसहकृतरक्तांशग्राहकप्रत्यक्षमेव ॥

एतेनस्फटिकादेर्जवाद्युपाधिनिबन्धनरक्तत्वमपिस्फुटम् ।

तथैव प्रतिबिम्बाभावे परस्पराभिमुखदर्पणद्वयमध्ये बहूनिमुखानि

नावलोकयेरन्, अपितु मुखद्वयमेवावलोकयेत । अन्यच्च प्रतिबिम्बाभावे प्रतिकृतिग्राहककाचेन दर्पणजलादितः प्रतिबिम्बप्रतिकृतिग्रहणं न स्यात् । नहि तस्यापि काचस्य किञ्चन तेजस्तैजसं वेन्द्रियमस्ति येन तद् गत्वा प्रतिबिम्बग्राहिदर्पणादिपरावृत्तं मुखादिसंलग्नं सदाकर्षनीव काचेऽपि तत्प्रकाशयेत् ॥ एवं चक्षुषो गत्वैव ग्राहकत्वे उन्मध्यकाचमध्यतस्तत्पृष्ठदेशस्थानां वस्तूनां विपरीततया प्रत्यक्षं न स्यात् । न हि तन्मध्यतश्चाक्षुषं तेजो गत्वा विपरीतं सद् विपरीततया वस्तु प्रकाशयति, चाक्षुषतेजसो विपरीतस्वस्वीकारेऽपि तस्य विपरीततया ग्राहकत्वाऽभावात् । विपरीतचाक्षुषतेजसो विपरीतग्राहकत्वे अधःशिरस्कैः सर्वं विपरीततया गृह्येत ।

अन्यच्च चक्षुषो गत्वैव ग्राहकत्वे पृथिवीत आनक्षत्रमण्डल व्यापकं चक्षुरवयवि स्वीकार्यम्, तस्य चैतावद्वयवसंग्रहः कुतो येन भगवता मरीचिमालिनाऽपि स्वप्रकाशेनाशक्यव्याप्तिकं नक्षत्रमण्डलं व्याप्नुयात्, नह्येतावति क्षुद्रे चक्षुषि इयता तेजोराशीनामाश्रयत्वं संभवति ।

आस्ता तत्रापि तुष्यिस्तथापि चक्षुषो गत्वा ग्राहकत्वे रात्रौ दूरतो यथा प्रदीपस्य ग्रहो न तथा तत्सन्निहितद्रव्यजातस्येत्यत्र कारणं मृग्यम् । नहि तत्सन्निहितदेशे चक्षुःसंयोगो नास्ति, दिवसे तावतो दूरादेव तत्प्रत्यक्षोदयात् । नाप्यालोकसंयोगाभावो, येन तत्प्रत्यक्षं न स्यात्, सन्निधाने तदैव प्रत्यक्षोदयात् । नापि दूरत्वदोष, तर्हि दिवसेऽपि तत्प्रत्यक्षं न स्यात् ।

प्रतिबिम्बग्राहकत्वपक्षे तु नैषामेकोऽपि दोष. पदमादधाति । ननु दूरतः प्रतिबिम्ब एव न कथं पततीति चेत् ? न, यद्राऽऽगततेजसो बलीयस्त्व तस्यैव प्रतिबिम्बश्चक्षुषि पतति अतएव दिवा ग्रहनक्षत्रादिकं नावलोक्यते, एवञ्च दीपागततेजसो बलीयस्तया दीपप्रतिबिम्बपातेन दीप प्रत्यक्षं भवति नतु सन्निहितदेशस्थस्य । नच चाक्षुषतेजसस्तत्र सूक्ष्म

तया तत्र प्रकाशयतीति साम्प्रतम्, तथा सति प्रदीपस्यापि प्रत्यक्षं न स्यात्, अतश्चक्षुः स्वाश्रयागतप्रतिबिम्बद्वारेणैव वस्तु प्रकाशयति ॥

त्वन्मते च चन्द्रादेः स्वल्पपरिमाणभ्रमे कारणान्तरमनासादयता दूरत्वस्य दोषत्वं वाच्यम्, अस्मन्मते च चक्षुःपतितप्रतिबिम्बपरिमाणाधीनो वस्तुनः स्वल्पत्वमहत्त्वग्रहः, दूरस्थचन्द्रादेः स्वल्पपरिमाणग्रहे च विषयाच्चक्षुषो दूरतया स्थितौ तत्राधिकदेशात आलोकप्रपातेन तावदधिकदेशानां महतः प्रतिबिम्बस्यासंभवात् स्वल्पप्रतिबिम्ब एव कारणम्। यदा तु तस्यैव दूरवीक्षणेन चक्षुषि महान् प्रतिबिम्बस्तदा सोऽपि महत्तया दृश्यत एव। एवं क्षुद्रस्यापि अणुवीक्षणेन चक्षुषि महति प्रतिबिम्बे पातिते सोऽपि महत्तया दृश्यते। एवमत्रमध्यकाचेन चक्षुषि सम्मुखस्थस्यापि महतो वस्तुनः क्षुद्रप्रतिबिम्बपाते तदपि क्षुद्रतया दृश्यते ॥

नन्वेवं हस्ते शीतस्पर्शमनुभवामीतिवत् चक्षुषि रूपं पश्यामीति प्रत्ययः स्यादितिचेत् न, यथार्थ प्रतिबिम्बोदयेन यथाप्रतिबिम्बं च दर्पणवद् ग्राहकत्वेन तदनुपपत्तेः। अतएव परमकारुणिकेन भगवता प्रतिबिम्बग्रहणार्थं चक्षुष आदर्शस्वभावता विहिता, नहि तेजसो विनिर्गमायादर्शस्वाभाव्यमपेक्षितम्, अपितु प्रतिबिम्बग्रहणायैव, नापि किञ्चन निष्प्रयोजनं विहितं तेनेति ॥

अन्यच्च चक्षुषः प्रतिबिम्बग्राहित्वेऽनुमानमपि प्रमाणं प्रभवति, तथाहि-चक्षुरिन्द्रियं स्वावच्छेदकसंयुक्तगुणं गृह्णाति इन्द्रियत्वात् घ्राणादिवत्, नायं हेत्वाभासः पक्षसत्त्वादि गमकतौपयिकपञ्चरूपोपपन्नत्वात् नापि सोपाधिकत्वाद्व्याप्यत्वासिद्धः उपाधेरसम्भवात्, न च तेजोभिन्नत्वमुपाधिः साध्यव्यापकताग्राहकप्रमाणाभावेन तस्योपाधित्वाभावात्। अन्यथा पर्वतो वह्निमान्धूमादित्यादावपि पर्वतभिन्नत्वमुपाधिः स्यादतस्तथा प्रतिबिम्बपाताभावे वस्तुनोऽग्रहणात्प्रतिबिम्बपाते एव च वस्तुनोग्रहणाच्च चक्षुः स्वावच्छेदकागतप्रतिबिम्बरूपादिकमेव गृह्णातीति सिद्धम् ॥

एवमेवास्य रसनादिवत्प्राप्यकारित्वम् नत्वन्यथा अत्रानुकूलतर्को विपक्षे बाधकतर्कोऽत्र पूर्वमेवोक्ता अतश्चाक्षुषप्रत्यक्षस्यान्यथोपपत्त्या चक्षुषो गत्वैव ग्राहकत्वं हेयम् ॥

मार्जारादि चक्षुषि तु प्रतिबिम्बप्रपातकस्वतन्त्रतेजस एव रश्मिवत्ता प्रतिपादिता परमेश्वरेण, अन्धकारे मूषिकादिप्रतिबिम्बग्रहणार्थम् । अस्मदादिचक्षुषि तु अस्मदादिभिर्दृश्यमानस्तादृशालोकः सन्नपि विषयप्रतिबिम्बप्रपातनाय नालमिति अन्धकारेऽस्माभिर्नोपलभ्यन्ते वस्तूनीति । नन्वेवं पार्थिवादिवस्तुजातस्य क्षणिकत्वापत्तिः प्रतिक्षणं तस्मात् पार्थिवांशविनिर्गमादिति चेत् ! का नो हानिस्तस्येष्टत्वात् परमाण्वादीनामेव नित्यत्वाभ्युपगमात् त्वयापि गन्धग्रहणार्थं पार्थिववस्तुनोंऽशविनिर्गम स्वीकारात् ॥

नच दर्शनस्पर्शनाभ्यामेकार्थग्रहणादिति न्यायसूत्रस्य विरोधो नहि भवन्मते य एव दृश्यते तस्यैव स्पार्शनं भवितुमर्हति, दृश्यते हि प्रतिबिम्बः स्पार्शनंच बिम्बस्येति वाच्यम् ! तत्रदर्शनस्पर्शनाभ्यामिकस्य पुरुषस्यार्थग्रहणात् अर्थानुसन्धानादित्यर्थः, तथाहि योऽहमद्राक्षं सोऽहम् स्पृशामीत्यनुसन्धानं स्थिरस्य पुंसः तच्चेन्द्रियस्य क्षणिकविज्ञानादेर्वाऽऽत्मत्वे न स्यात् । तत्रशङ्का, विषयव्यवस्थानादिति । तत्रोत्तरं तद्व्यवस्थानादेवात्मसद्भावादप्रतिषेध इति ॥

नन्वेवमपि वेदान्तिनां विषयावच्छिन्न चैतन्यवृत्त्यवच्छिन्न चैतन्ययोरभेदरूपप्रत्यक्षत्वं,तथा साङ्ख्यानामन्तःकरणस्येन्द्रियद्वारेण विषयदेशगमनं तद्द्वारेण परिणामरूप ज्ञानञ्च नोपपद्यत इति चेत् ! न, विषयदेशगमनाभावेऽपिताहृशाभेदस्य तथेन्द्रियद्वारेण विषयाकारपरिणामस्योपपत्तेर्न कोऽपि दोष इत्यास्तां विस्तर इति शिवम् ॥

वेदतर्कवसुव्योममिते शाके शुचौ मुदा ।
आशुतोषेण रचितो ग्रन्थोऽस्तु विदुषां मुदे ॥